

# अथ देव्याः कवचम्

(उच्चस्वर से स्पष्ट उच्चारण करके प्रतिदिन पाठ करें)

ॐ अस्य श्रीचण्डी-कवचस्य ब्रह्मा ऋषिः, अनुष्टुप् छन्दः, चामुण्डा देवता, अङ्ग-न्यासोक्त-मातरो, बीजम्, दिग्बन्ध-देवतास् तत्त्वम् , श्रीजगदम्बा-प्रीत्यर्थे सप्तशती-पाठाङ्गत्वेन जपे विनियोगः । (Reading time is 60 minutes, for daily Sadhana, one may not read the Sanskrit in red letters) This is an accepted short version (मध्यमचरित्र) for daily reading and sadhana that must be completed with Havan by a priest.

ॐनमश्चण्डिकायै ॥

मार्कण्डेय उवाच

ॐ यद्गुह्यं परमं लोके, सर्वरक्षाकरं नृणाम् ।
यन्न कस्यचिदाऽऽख्यातं, तन्मे ब्रूहि पितामह ॥

O Grandfather, please tell me the most secret sadhana which protect people from all calamity and which you have not revealed to anybody.

ब्रह्मोवाच

अस्ति गुह्यतमं विप्र, सर्वभूतोप-कारकम्
देव्यास्तु कवचं पुण्यं, तच्छृणुष्व महामुने

such a sadhana is devi kavach which the most secret and beneficial and holy and does good. listen to it.

प्रथमं शैलपुत्री च, द्वितीयं ब्रह्मचारिणी
तृतीयं चन्द्रघण्टेति, कूष्माण्डेति चतुर्थकम्
पञ्चमं स्कन्दमातेति, षष्टं कात्यायनीति च
सप्तमं कालरात्रीति, महागौरीति चाष्टमम्
नवमं सिद्धिदात्री च, नवदुर्गाः प्रकीर्तिताः
उक्तान्य्-एतानि नामानि, ब्रह्मणैव महात्मना ५

there are nine forms of devi called nav durga. they are: 1) shailputri 2) brahamcharini, 3) chandra-ghanta, 4) kushmanda, 5) skandamaata, 6) katyayani, 7) kalratri, 8) mahagauri, and 9) durga

अग्निना दह्यमानस्तु, शत्रुमध्ये गतो रणे
विषमे दुर्गमे चैव, भयार्ताः शरणं गताः
न तेषां जायते किंचिद्-अशुभं रणसंकटे
नापदं तस्य पश्यामि, शोकदुःखभयं न हि

if one is burning in fire, is surrounded by enemies in the battlefield, is in great trouble, is in great fear and one comes to durga, no harm can touch him. no harm can be done to him in the battlefield and fear, sorrow and unhappiness does not come to him.

यैस्तु भक्त्या स्मृता नूनं, तेषां वृद्धिः प्रजायते
ये त्वां स्मरन्ति देवेशि, रक्षसे तान् न संशयः

those who remember devi certainly prosper and are protected by you.

प्रेतसंस्था तु चामुण्डा, वाराही महिषासना
ऐन्द्री गजसमारूढा, वैष्णवी गरुडासना

chamunda devi rides preta, barahi rides on buffallo, aindri uses elephant, vaishnavi rides garuda.

माहेश्वरी वृषारूढा, कौमारी शिखिवाहना
लक्ष्मीः पद्मासना देवी, पद्महस्ता हरिप्रिया १०

maheshwari rides on ox, kaumari rides on peacock. consort of lord Vishnu, lakshamidevi sits on lotus with lotus in her hands.

श्वेतरूपधरा देवी, ईश्वरी वृषवाहना
ब्राह्मी हंससमारूढा, सर्वाभरणभूषिता

ishvaridevi, sitting on ox, is white. brahamidevi is sitting on hans and wearing many types of ornaments.

इत्येता मातरः सर्वाः, सर्वयोगसमन्विताः
नानाभरण-शोभाढ्या, नानारत्नोप-शोभिताः

thus these mothers have all yogic powers. there are many other devis wearing all types of ornaments and gems.

दृश्यन्ते रथमाऽऽरूढा, देव्यः क्रोधसमाकुलाः
शङ्खं चक्रं गदां शक्तिं, हलं च मुसलायुधम्
खेटकं तोमरं चैव, परशुं पाशमेव च
कुन्तायुधं त्रिशूलं च, शार्ङ्गम् आयुधम् उत्तमम्
दैत्यानां देहनाशाय, भक्तानाम् अभयाय च
धारयन्त्या-युधानीत्थं, देवानां चा हिताय वै १५

all devis are sitting on chariot and are full of anger and having conch, chakra, gada, hal, shakti, musal, khetak, tomar, parshu, pash, kunt, trishul, fine shaarang bow and other weapons in their hands. the purpose of having

weapons is to protect the devotees, do good to devas and destroy the demons.

नमस्तेऽस्तु महारौद्रे, महाघोर-पराक्रमे
महाबले महोत्साहे, महाभयविनाशिनि

O devi of great raudra, prakram, strength and utsaah, you are the remover of great fear, i bow down to you.

त्राहि मां देवि दुष्प्रेक्ष्ये, शत्रूणां भयवर्धिनि
प्राच्यां रक्षतु मामैन्द्री, आग्नेय्याम् अग्निदेवता
दक्षिणेऽवतु वाराही, नैरृत्यां खड्गधारिणी
प्रतीच्यां वारुणी रक्षेद् , वायव्यां मृगवाहिनी

its very difficult to see you. o, the increaser of fear in enemies, protect me. Aindri protect me in the east side, Agnishakti in agnikone, vaaraahi in the south, khadagdharini in nairritya, vaaruni in the west, devi who rides on dear protect me in vaayavya

उदीच्यां पातु कौमारी, ऐशान्यां शूलधारिणी
ऊर्ध्वं ब्रह्माणि मे रक्षेद-ऽधस्ताद् वैष्णवी तथा

kaumari protect from the north, shooldharini in ishaan. brahmani protect from the top, and vaishnavi devi protect from the bottom.

एवं दश दिशो रक्षेच् -चामुण्डा शववाहना
जया मे चाग्रतः पातु, विजया पातु पृष्ठतः २०

similarly, the chamunda devi who rides on dead body protect me from all ten sides. jaya protect in the front, and vijaya protect the back.

अजिता वामपार्श्वे तु, दक्षिणे चापराजिता
शिखामुद्योतिनी रक्षेद्-उमा मूर्ध्नि व्यवस्थिता

ajita protect the left and aparajita from the right, udyotini protect the head and uma devi protect the mind.

मालाधरी ललाटे च, भ्रुवौ रक्षेद् यशस्विनी
त्रिनेत्रा च भ्रुवोर्मध्ये, यमघण्टा च नासिके

maalaadhari protect the forehead and yashashwini devi protect the pupils. yamghantadevi protect the third eye and nose.

शङ्खिनी चक्षुषोर्मध्ये, श्रोत्रयोर्-द्वारवासिनी
कपोलौ कालिका रक्षेत् , कर्णमूले तु शांकरी

shankhini protect the middle of the eyes and dwarvaasini protect the nose. kalikadevi protect the kapole and base of the ear be protected by shankari-devi.

नासिकायां सुगन्धा च, उत्तरोष्ठे च चर्चिका
अधरे चामृतकला, जिह्वायां च सरस्वती

Sugandha protect the nose, top lip be protected by charchika, bottom lip by amritkalaa and tongue by sarasvati devi.

दन्तान् रक्षतु कौमारी, कण्ठदेशे तु चण्डिका
घण्टिकां चित्रघण्टा च, महामाया च तालुके २५

kaumari protect the teeth, chandika protect kantha, chitraghanta protect ghanti, and mahamaya protect talu.

कामाक्षी चिबुकं रक्षेद् , वाचं मे सर्वमङ्गला
ग्रीवायां भद्रकाली च, पृष्ठवंशे धनुर्धरी
नीलग्रीवा बहिःकण्ठे, नलिकां नलकूबरी
स्कन्धयोः खड्गिनी रक्षेद् , बाहू मे वज्रधारिणी
हस्तयोर्दण्डिनी रक्षेद् , अम्बिका चाङ्गुलीषु च
नखाञ्छूलेश्वरी रक्षेत् , कुक्षौ रक्षेत्कुलेश्वरी

kamakshi protect bellybutton, sarvamangala protect the voice, bhadrakali protect neck, dhanudhari protect spine, neelgrivaa protect the outer kantha, and kantha tube be protected by nalkoobari, both shoulders by khadaginidevi, both hands by bajradharini, both hands by dandinidevi, fingers by ambika, nails by shooleshvari, stomack by kuleshvari.

स्तनौ रक्षेन्महादेवी, मनः शोकविनाशिनी
हृदये ललिता देवी, उदरे शूलधारिणी

both breasts by mahadevi, mind by shokavinashini, heart by lalitadevi, stomack by shooldharini.

नाभौ च कामिनी रक्षेद् , गुह्यं गुह्येश्वरी तथा
पूतना कामिका मेढ्रं , गुदे महिषवाहिनी ३०
कट्यां भगवती रक्षेज्, जानुनी विन्ध्यवासिनी
जङ्घे महाबला रक्षेत्-सर्वकाम-प्रदायिनी
गुल्फयोर्नारसिंही च, पादपृष्ठे तु तैजसी
पादाङ्गुलीषु श्री रक्षेत्-पादाधस् तलवासिनी

navel by kaamini, private part by guhyeshwari, ling by pootana and kamika, kidney by mahishvaahini, waist by bhagavati, knees by vindhyavaasini, pindali by mahabala devi, …. by narsinghi, back of both feet by taijasi, fingers of the feet by shridevi, bottom of the feet by talvasini.

नखान् दंष्ट्राकराली च, केशांश्चैवोर्ध्वकेशिनी
रोमकूपेषु कौबेरी, त्वचं वागीश्वरी तथा
रक्तमज्जा-वसामांसान्य्, अस्थिमेदांसि पार्वती
अन्त्राणि कालरात्रिश्च, पित्तं च मुकुटेश्वरी

nails by danshtraakaraali, hairs by urdhavakeshini devi, holes of the hair by kauberi, skin by vaagishvari devi, parvatidevi protect blood, majja, vasaa, meat, bone and medaa. kalratri protect colon, pita by mukuteshvari.

पद्मावती पद्मकोशे, कफे चूडामणिस्तथा
ज्वालामुखी नखज्वालाम्, अभेद्या सर्वसंधिषु ३५

moolaadhaar by padmaavati, kafa by chudamani, shine of the nails by javaalaamukhi, all joints by abhedyaa devi

शुक्रं ब्रह्माणि मे रक्षे-च्छायां छत्रेश्वरी तथा
अहंकारं मनो बुद्धिं, रक्षेन्मे धर्मधारिणी

semen by brahmaani, shadow by chatreshvari, mind, intellect and ahamkaar bydharmadhaarini.

प्राणापानौ तथा व्यानम्-उदानं च समानकम्
वज्रहस्ता च मे रक्षेत् , प्राणं कल्याणशोभना

praan, apaan, vyaan, udaan and samaan air by vajrahastaadevi, praana by kalyaanshobhanaa

रसे रूपे च गन्धे च, शब्दे स्पर्शे च योगिनी
सत्त्वं रजस्तमश्चैव, रक्षेन्नारायणी सदा

yogini devi protect while enjoying 5 sense objects (ras, roop, gandh, sound and touch) and three gunas be protected by naraayani devi.

आयू रक्षतु वाराही, धर्मं रक्षतु वैष्णवी
यशः कीर्तिं च लक्ष्मीं च, धनं विद्यां च चक्रिणी
गोत्रम् इन्द्राणि मे रक्षेत्-पशून्मे रक्ष चण्डिके
पुत्रान् रक्षेन्महालक्ष्मीर्-भार्यां रक्षतु भैरवी ४०

longevity by vaaraahi devi, dharma by vaishnavi, fame, wealth, vidya by chakrini, gotra by indraani, my animals by chandikaa, children by mahalakshmi, spouse by vairavvi.

पन्थानं सुपथा रक्षेन्-मार्गं क्षेमकरी तथा
राजद्वारे महालक्ष्मीर्-विजया सर्वतः स्थिता
रक्षाहीनं तु यत्स्थानं, वर्जितं कवचेन तु
तत्सव रक्ष मे देवि, जयन्ती पापनाशिनी

my path by supathaa, maarga by kshemakari, mahalakshmi protect in court, and vijayadevi protect from all fear. jayantidevi, please protect other parts that have not been mentioned, because you are great and destroy sins.

पदमेकं न गच्छेतुतु, यदीच्छे-च्छुभमाऽऽत्मनः
कवचेनावृतो नित्यं, यत्र यत्रैव गच्छति
तत्र तत्रार्थलाभश्च, विजयः सार्वकामिकः
यं यं चिन्तयते कामं, तं तं प्राप्नोति निश्चितम्
परमैश्वर्यम् अतुलं, प्राप्स्यते भूतले पुमान्

if one wants to do good to one's body, then one must not go anywhere without reading the kavach mantras. the one who is protected by kavach gets wealth, victory, siddhi and whatever one wants. such a person obtains incomparable opulence on this earth.

निर्भयो जायते मर्त्यः, संग्रामेष्व् अपराजितः
त्रैलोक्ये तु भवेत्पूज्यः, कवचेनावृतः पुमान् ४५

protected by kavach, one becomes fearless, becomes victorious in war and is respected in all three worlds.

इदं तु देव्याः कवचं, देवानाम् अपि दुर्लभम्
यः पठेत् प्रयतो नित्यं, त्रिसन्ध्यं श्रद्धयान्वितः
दैवी कला भवेत्तस्य, त्रैलोक्येष्व् अपराजितः
जीवेद् वर्षशतं साग्रम्-अपमृत्युविवर्जितः

this kavach is not easy to get even by devas. one who reads this three times daily with devition and according to vidhi, obtains daivikala, is never defeated anywhere, is protected from premature death, and lives over 100 years.

नश्यन्ति व्याधयः सर्वे, लूताविस्फोटकादयः
स्थावरं जङ्गमं चैव, कृत्रिमं चापि यद्विषम्
अभिचाराणि सर्वाणि, मन्त्रयन्त्राणि भूतले
भूचराः खेचराश्चैव, जलजाश्चोपदेशिकाः
सहजा कुलजा माला, डाकिनी शाकिनी तथा
अन्तरिक्षचरा घोरा, डाकिन्यश्च महाबला ५०

all deseases are cured, poisonous insects bites are cured, is unaffected by tantric effects, all bad elements do not harm.

ग्रहभूतपिशाचाश्च, यक्षगन्धर्व-राक्षसाः
ब्रह्मराक्षसवेतालाः, कूष्माण्डा भैरवादयः
नश्यन्ति दर्शनात्तस्य, कवचे हृदि संस्थिते
मानोन्नतिर्भवेद् राज्ञस्-तेजो-वृद्धिकरं परम्

nothing hurts a person who waers the kavach and obtains respect from king. this kavach increases teja.

यशसा वर्धते सोऽपि, कीर्तिमण्डितभूतले
जपेत् सप्तशतीं चण्डीं, कृत्वा तु कवचं पुरा
यावद्भूमण्डलं धत्ते, सशैल-वन-काननम्
तावत्तिष्ठति मेदिन्यां, संततिः पुत्रपौत्रिकी
देहान्ते परमं स्थानं, तत्सुरैरपि दुर्लभम्
प्राप्नोति पुरुषो नित्यं, महामायाप्रसादतः ५५

obtains yash and one who reads this before starting to read durgasaptshati flourishes on this earth and obtains mukti by the grace of mahamayadevi that is not easy even for the devas. reader obtains beautiful divya form and enjoys life with lord shiva.

लभते परमं रूपं, शिवेन सह मोदते ॥ ॐ॥ ॥५६॥

इति देव्याः कवचं सम्पूर्णम्

# अथार्गलास्तोत्रम्

ॐ अस्य श्रीअर्गलास्तोत्र-मंत्रस्य विष्णुर्ऋषिः, अनुष्टुप् छन्दः, श्रीमहालक्ष्मीर्देवता, श्रीजगदम्बा-प्रीत्यर्थे सप्तशती-पाठाङ्गत्वेन जपे विनियोगः ।

ॐ नमश्चण्डिकायै

मार्कण्डेय उवाच

ॐ जयन्ती मङ्गला काली, भद्रकाली कपालिनी
दुर्गा क्षमा शिवा धात्री, स्वाहा स्वधा नमोऽस्तु ते

markandeya ji said: o devi, you are victorious (jayanti), you are mangala or giver of moksha, you destroy during pralaya-kaal (kaali), giver of happiness and wealth (bhdra kaali), you have kapal in your hands and wear mundmaala (kapalini), remover of obstacle (durga), forgiver, you do good (shiva) to others, you wear everything (dhatri), you support devas as swaha by taking yajna offering, and support pitra as swadha by taking tarpan. I bow down to you.

जय त्वं देवि चामुण्डे, जय भूतार्तिहारिणि
जय सर्वगते देवि, कालरात्रि नमोऽस्तु ते
मधुकैटभ-विद्रावि-विधातृवरदे नमः
रूपं देहि जयं देहि यशो देहि द्विषो जहि

killer of madhu and kaitabh and giver of vardan to brahmaaji, namaste. give me health, victory, fame….

महिषासुर-निर्णाशि, भक्तानां सुखदे नमः
रूपं देहि जयं देहि यशो देहि द्विषो जहि
रक्तबीजवधे देवि, चण्डमुण्ड-विनाशिनि
रूपं देहि जयं देहि यशो देहि द्विषो जहि ५
शुम्भस्यैव निशुम्भस्य, धूम्राक्षस्य च मर्दिनि
रूपं देहि जयं देहि यशो देहि द्विषो जहि
वन्दिताङ्घ्रि-युगे देवि, सर्वसौभाग्य-दायिनि
रूपं देहि जयं देहि यशो देहि द्विषो जहि

prayed by all having two foot and giver of good luck ....

अचिन्त्य-रूपचरिते, सर्वशत्रु-विनाशिनि
रूपं देहि जयं देहि यशो देहि द्विषो जहि

your form and character cannot be described. you are destroyer of enemy. …..

नतेभ्यः सर्वदा भक्त्या, चण्डिके दुरितापहे
रूपं देहि जयं देहि यशो देहि द्विषो जहि

remover of paap, those who bow down with devotion to your feet give them ....

स्तुवद्भ्यो भक्तिपूर्वं त्वां, चण्डिके व्याधिनाशिनि
रूपं देहि जयं देहि यशो देहि द्विषो जहि १०

remover of all illness, those who do stuti with devotion, give them ….

चण्डिके सततं ये त्वाम् अर्चयन्तीह भक्तितः
रूपं देहि जयं देहि यशो देहि द्विषो जहि

o chandike, those who worship you with devotion. give them …

देहि सौभाग्यम् आरोग्यं, देहि मे परमं सुखम्
रूपं देहि जयं देहि यशो देहि द्विषो जहि

give me good luck, health and happiness. give me ….

विधेहि द्विषतां नाशं, विधेहि बलमुच्चकैः
रूपं देहि जयं देहि यशो देहि द्विषो जहि

those who are envious of me, destroy them and increase my strength. give me ….

विधेहि देवि कल्याणं, विधेहि परमां श्रियम्
रूपं देहि जयं देहि यशो देहि द्विषो जहि

do good to me and give me the best wealth of knowledge. give me ….

सुरासुर-शिरो-रत्न-निघृष्ट-चरणेऽम्बिके
रूपं देहि जयं देहि यशो देहि द्विषो जहि १५

o ambike, sur and asur both put their mukut on your feet. give me….

विद्यावन्तं यशस्वन्तं, लक्ष्मीवन्तं जनं कुरु
रूपं देहि जयं देहि यशो देहि द्विषो जहि

make your devotees scholar, famous, and wealthy and give …..

प्रचण्ड-दैत्य-दर्पघ्ने, चण्डिके प्रणताय मे
रूपं देहि जयं देहि यशो देहि द्विषो जहि

destroyer of pride of powerful asurs, I am surrendered to you, give me ….

चतुर्भुजे चतुर्वक्त्र-संस्तुते परमेश्वरि
रूपं देहि जयं देहि यशो देहि द्विषो जहि

o devi with four arms and praised by four mouthed Brahmaa ji, give me ..

कृष्णेन संस्तुते देवि, शश्वद्भक्त्या सदाम्बिके
रूपं देहि जयं देहि यशो देहि द्विषो जहि

vishnu always prais you with devotion, give me ....

हिमाचलसुतानाथ-संस्तुते परमेश्वरि
रूपं देहि जयं देहि यशो देहि द्विषो जहि २०

husband of parvati praise you, o parmeshwari, give me ...

इन्द्राणीपतिसद्भाव-पूजिते परमेश्वरि
रूपं देहि जयं देहि यशो देहि द्विषो जहि

husband of sachi, indra, worship you devi, give me ...

देवि प्रचण्ड-दोर्दण्ड-दैत्यदर्प-विनाशिनि
रूपं देहि जयं देहि यशो देहि द्विषो जहि

destroyer of great asuras pride, give me ...

देवि भक्त-जनोद्दाम-दत्ताऽऽनन्दोदयेऽम्बिके
रूपं देहि जयं देहि यशो देहि द्विषो जहि

o devi you always keep on giving great joy to your devotees. give me ….

पत्नीं मनोरमां देहि, मनोवृत्तानुसारिणीम्
तारिणीं दुर्गसंसार-सागरस्य कुलोद्भवाम्

give me a beautiful wife who obeys me who can help me get out of ocean of the world and is born in a nice family. the one who reads this argala stotra before starting ss, gets the resuls of ss reading and obtains good amount of wealth.

इदं स्तोत्रं पठित्वा तु, महास्तोत्रं पठेन्नरः
स तु सप्तशती-संख्या-वरमाऽऽप्नोति सम्पदाम्

इति देव्याः अर्गलास्तोत्रं सम्पूर्णम् ॥ॐ॥२५॥

# अथ कीलकम्

ॐ अस्य श्रीकीलक-मंत्रस्य शिव ऋषिः, अनुष्टुप् छन्दः, श्रीमहासरस्वती देवता, श्रीजगदम्बाप्रीत्यर्थं सप्तशती-पाठाङ्गत्वेन जपे विनियोगः।

ॐ नमश्चण्डिकायै

मार्कण्डेय उवाच

ॐ विशुद्धज्ञान-देहाय, त्रिवेदीदिव्य-चक्षुषे
श्रेयःप्राप्ति-निमित्ताय, नमः सोमार्धधारिणे

markandeyaji said: whose body is pure knowledge, three vedas are the three eyes, who is for goodness sake, and who wears half moon-mukut on his head, i pray to that lord Shiva.

सर्वम् एत-द्विजानीयान्-मन्त्राणामऽभिकीलकम्
सोऽपि क्षेमम् अवाप्नोति, सततं जाप्यतत्परः

one should know and do upasanaa with the सप्तशतीस्तोत्रम् that removes great obstacles (अभिकीलकम्) to mantras.

although one who does japa of other mantras also gets results.

सिद्ध्यन्त्य् उच्चाटनादीनि, वस्तूनि सकलान्यपि
एतेन स्तुवतां देवी, स्तोत्रमात्रेण सिद्ध्यति

and they get siddhi and get all desired objects. but those who just worship devi with saptashadi also get devi-sidhi.

न मंत्रो नौषधं तत्र, न किञ्चिदपि विद्यते
विना जाप्येन सिद्ध्येत, सर्वम् उच्चाटनादिकम्

they don't need mantra, herbs and other methods. all is done without japa.

समग्राण्यपि सिद्ध्यन्ति, लोकशङ्काम् इमां हरः
कृत्वा निमन्त्रयामास, सर्वमेवम् इदं शुभम् ५

there was aquestion or doubt about which one, the saptshadi (ss) or other methods is better. lord shiva said the former was the best.

स्तोत्रं वै चण्डिकायास्तु, तच्च गुप्तं चकार सः
समाप्तिर्न च पुण्यस्य, तां यथा-वन्नियन्त्रणाम्

lord shiva hid this ss. the punya from reading ss does not exhaust. such is not the case with other mantra. thus the declration of superiority by lord shiva is true.

सोऽपि क्षेमम् अवाप्नोति, सर्वमेवं न संशयः
कृष्णायां वा चतुर्दश्याम् , अष्टम्यां वा समाहितः
ददाति प्रतिगृह्णाति, नान्यथैषा प्रसीदति
इत्थंरूपेण कीलेन, महादेवेन कीलितम्

those who do japa of other mantras also is undoubtedly benefited by ss japa. those who offer everything to devi on 8th or 14th day of dark fortnight and takes back them as prasad (दानप्रतिग्रहण), devi is pleased. thus shiva has put this restriction on it.

यो निष्कीलां विधायैनां, नित्यं जपति संस्फुटम्
स सिद्धः स गणः सोऽपि, गन्धर्वो जायते नरः

those who do daily reading as described above, gets siddhi and becomes पार्षदगण of devi and gandharva.

न चैवाप्य-टतस् तस्य, भयं क्वापीह जायते
नापमृत्युवशं याति, मृतो मोक्षम् अवाप्नुयात् १०

travelling anywhere, he has no fear, does not die prematurely, and obtains moksha after death.

ज्ञात्वा प्रारभ्य कुर्वीत, न कुर्वाणो विनश्यति
ततो ज्ञात्वैव सम्पन्नम्-इदं प्रारभ्यते बुधैः

therefore, wise ones read keelak and do nishkeelan before starting to read ss.

सौभाग्यादि च तत्किञ्चिद् , दृश्यते ललनाजने
तत्सर्वं तत्प्रसादेन, तेन जाप्यम् इदं शुभम्

whatever good luck is found in women is due to prasad of devi ji. therefore one must always do japa of ss.

शनैस्तु जप्यमानेऽस्मिन्, स्तोत्रे सम्पत्तिर् उच्चकैः
भवत्येव समग्रापि, ततः प्रारभ्यमेव तत्

one must do reading clearly and in high tone. why people don't do ss that gives glory, good luck, health and wealth, destroys enemies and gives moksha?

ऐश्वर्यं यत्प्रसादेन, सौभाग्यारोग्यसम्पदः
शत्रुहानिः परो मोक्षः, स्तूयते सा न किं जनैः

इति देव्याः कीलकस्तोत्रं सम्पूर्णम् ॥ॐ॥१४॥

=============

# अथ नवारणविधिः

ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे
(एक माला का मानसिक जाप करें)

===============

# द्वितीयोऽध्यायः

(देवताओं के तेज से देवी का प्रादुर्भाव तथा महिषासुर की सेना का वध)

ॐ मध्यमचरित्रस्य विष्णुर्ऋषिः, श्रीमहालक्ष्मीर्देवता, उष्णिक् छन्दः, शाकम्भरी शक्तिः, दुर्गा बीजम् वायुस्तत्त्वम्, यजुर्वेदः स्वरूपम् श्रीमहालक्ष्मीप्रीत्यर्थं मध्यमचरित्रजपे विनियोगः ।

ध्यानम् 19x4

ॐ अक्षस्रक्परशुं गदेषुकुलिशं, पद्मं धनुष्कुण्डिकां
दण्डं शक्तिमऽसिं च चर्म, जलजं घण्टां सुराभाजनम्।
शूलं पाशसुदर्शने च, दधतीं हस्तैः प्रसन्नाऽऽननां
सेवे सैरिभ-मर्दिनीम् इह, महालक्ष्मीं सरोज-स्थिताम् ॥

i pray to mahalakshmi sitting on lotus with happy face, having akshmaala, parash, gada, arrow, bajra, padma, bow, kundika, danda, shakti, sword, shield, conch, bell, madu glass, shool, paash and charka in her hands.

'ॐ ह्रीं' ऋषिरुवाच

देवासुरमऽअभूद्युद्धं, पूर्णमऽब्दशतं पुरा
महिषेऽसुराणामऽधिपे, देवानां च पुरन्दरे २

rishi said: in ancient time, there was a 100 year war between sur and asur. leader of asura was mahishasur and indra was the leader of devas.

तत्राऽसुरैर्-महावीर्यै-र्देवसैन्यं पराजितम्
जित्वा च सकलान् देवान् -इन्द्रोऽभून् महिषासुरः

sura was defeated by asura and mahishasur became indra.

ततः पराजिता देवाः, पद्मयोनिं प्रजापतिम्
पुरस्कृत्य गतास्तत्र, यत्रेश-गरुडध्वजौ

after being defeated, devas with bramaaji leading, went where Vishnu and shankara was present

यथावृत्तं तयोस्तद्वन् , महिषासुरचेष्टितम्
त्रिदशाः कथयामासुर्-देवाभिभव-विस्तरम् ५

devas told Vishnu and shiva, in details about the power of mahishasur and how devas were defeated and said:

सूर्येन्द्राग्न्य-निलेन्दूनां, यमस्य वरुणस्य च
अन्येषां चाधिकारान् स, स्वयम् एवाऽधितिष्ठति

o, lord, mahishasur has become the king of all devas: surya, indra, agni, vaayu, moon, yama, varun and other devas.

स्वर्गान्-निराकृताः सर्वे, तेन देवगणा भुवि
विचरन्ति यथा मर्त्या, महिषेण दुरात्मना

bad mahishasur has driven all devas out of heaven and they are now living in the human world

एतद्वः कथितं सर्वम्-अमरारिविचेष्टितम्
शरणं वः प्रपन्नाः स्मो, वधस्तस्य विचिन्त्यताम्

I told you all the deeds of asuras, we have now taken refuge in you, please think about the means of killing asuras.

इत्थं निशम्य देवानां, वचांसि मधुसूदनः
चकार कोपं शम्भुश्च, भ्रुकुटी-कुटिलाननौ

hearing the deeds from devas, vishnu and shiva became angry at asuras and their brows became stretched, mouth curved.

ततोऽतिकोपपूर्णस्य, चक्रिणो वदनात् ततः
निश्चक्राम महत्तेजो, ब्रह्मणः शंकरस्य च १०
अन्येषां चैव देवानां, शक्रादीनां शरीरतः
निर्गतं सुमहत् तेजस्-तच्चैक्यं समगच्छत

a great light came out of the mouth of Vishnu when he was angry. similarly, light came out of bodies of Brahmaa, shiva and other devas. and all powers combined into one.

अतीव तेजसः कूटं, ज्वलन्तम् इव पर्वतम्
ददृशुस्ते सुरास्तत्र, ज्वालाव्याप्त-दिगन्तरम्

all the combined powers looked like a burning mountain and the light spread all over. devas saw this.

अतुलं तत्र तत्तेजः, सर्वदेवशरीरजम्
एकस्थं तदभून्नारी, व्याप्तलोकत्रयं त्विषा

the teja coming out of devas bodies was incomparable and took the form of a womam and illumined the three worlds.

यदभूच्छाम्भवं तेजस्-तेनाजायत तन्मुखम्
याम्येन चाभवन् केशा, बाहवो विष्णुतेजसा

devi's mouth came out of shiva's tej, hair in her head came out of yama's tej and arms came out of vishnu's tej.

सौम्येन स्तनयोर्युग्मं, मध्यं चैन्द्रेण चाभवत्
वारुणेन च जङ्घोरू, नितम्बस्तेजसा भुवः १५

both breasts came out of moon's tej, middle body came out of indra's tej, thigh from varun's, and so on.

ब्रह्मणस्तेजसा पादौ, तदङ्गुल्योऽर्क-तेजसा
वसूनां च कराङ्गुल्यः, कौबेरेण च नासिका

foot from brahmaa's, foot fingers from sun, hand fingers from vasu's, and nose from kubera's tej.

तस्यास्तु दन्ताः सम्भूताः, प्राजापत्येन तेजसा
नयनत्रितयं जज्ञे, तथा पावक-तेजसा

teeth from prajapati brahma's, and three eyes from fire's.

भ्रुवौ च संध्ययोस्तेजः, श्रवणावऽनिलस्य च
अन्येषां चैव देवानां, सम्भवस् तेजसां शिवा

brows from sandhya's, ears from wind's, and similarly other body parts from other deva's tej.

ततः समस्तदेवानां, तेजोराशिसमुद्भवाम्
तां विलोक्य मुदं प्रापुरऽमरा महिषार्दिताः

devas, suffered in the hands of great mahishasur, became very happy by seeing the devi coming out of devas, tej.

शूलं शूलाद्विनिष्कृष्य, ददौ तस्यै पिनाकधृक्
चक्रं च दत्तवान् कृष्णः, समुत्पाद्य स्वचक्रतः २०
शङ्खं च वरुणः शक्तिं, ददौ तस्यै हुताशनः
मारुतो दत्तवांश्चापं, बाणपूर्णे तथेषुधी

shiva gave shool, vishnu gave a chakra, varun gave a conch, agni gave power, vayu gave her bows and arrow full of two tarkash,

वज्रम् इन्द्रः समुत्पाद्य, कुलिशादमऽराधिपः
ददौ तस्यै सहस्राक्षो, घण्टाम् ऐरावताद् गजात्
कालदण्डाद्यमो दण्डं, पाशं चाम्बुपतिर्ददौ
प्रजापतिश्चाक्षमालां, ददौ ब्रह्मा कमण्डलुम्

indra gave bajra, and ghanta taken out from the elephants neck. yamaraj gave danda, varun ave paash, prajapati gave mala, brahma gave kamandalu.

समस्तरोमकूपेषु, निजरश्मीन् दिवाकरः
कालश्च दत्तवान् खड्गं, तस्याश्चर्म च निर्मलम्
क्षीरोदश्चाऽमलं हार-मजरे च तथाम्बरे
चूडामणिं तथा दिव्यं, कुण्डले कटकानि च २५
अर्धचन्द्रं तथा शुभ्रं, केयूरान् सर्वबाहुषु
नूपुरौ विमलौ तद्वद् , ग्रैवेयकम् अनुत्तमम्
अङ्गुलीयक रत्नानि, समस्ता-स्वङ्गुलीषु च
विश्वकर्मा ददौ तस्यै, परशुं चातिनिर्मलम्
अस्त्राण्यऽनेकरूपाणि, तथाभेद्यं च दंशनम्
अम्लानपङ्कजां मालां, शिरस्युरसि चापराम्

surya filled devi with power of his rays, kaal gave sword and shield, ksheer-sagar gave a white mala and clothes, and chudamani, kundal, kada, white half moon, ring and other jewelry. vishvakarma gave her parsha, together with other weapons, kavach, ever fresh lotus mala

अददज्-जलधिस्तस्यै, पङ्कजं चातिशोभनम्
हिमवान् वाहनं सिंहं, रत्नानि विविधानि च

jaladhi gave her lotus flower, himalaya gave the lion and other jewels.

ददावशून्यं सुरया, पानपात्रं धनाधिपः
शेषश्च सर्वनागेशो, महामणि-विभूषितम् ३०
नागहारं ददौ तस्यै, धत्ते यः पृथिवीमिमाम्
अन्यैरपि सुरैर्देवी, भूषणैरायुधैस्तथा
सम्मानिता ननादोच्चैः, साट्टहासं मुहुर्मुहुः
तस्या नादेन घोरेण, कृत्स्नमापूरितं नभः

kuvera gave a potful of wine. sheshanaag who carries the load of the world, gave her many jewel studded naagmala. other devas also gave other weapons and jewelries. devi laughed and sky vibrated with the sound.

अमायताति-महता, प्रतिशब्दो महानभूत्
चक्षुभुः सकला लोकाः, समुद्राश्च चकम्पिरे

the sound produced by devi was so great that sky was unable to bear it, the echo of the sound produced great commotion and ocean trembled.

चचाल वसुधा चेलुः, सकलाश्च महीधराः
जयेति देवाश्च मुदा, तामूचुः सिंहवाहिनीम्

earth started to tremble, mountains shooked up. at that time devas said jai to devi on the lion and prayed with devotion.

तुष्टुवुर्मुनयश्चैनां, भक्तिन् अम्रात्ममूर्तयः
दृष्ट्वा समस्तं संक्षुब्धं, त्रैलोक्यम् अमरारयः ३५
सन्नद्धाखिल-सैन्यास्ते, समुत्तस्थु-रुदायुधाः
आः किम् एतद् इति क्रोधादाऽऽभाष्य महिषासुरः
अभ्यधावत तं शब्दम्, अशेषैर् असुरैर्वृतः
स ददर्श ततो देवीं, व्याप्तलोकत्रयां त्विषा

asuras became ready for war after seeing the three worlds in fear. mahishasur became agry and spoke: what is happening? he ran towards the roaring sound of lion and saw devi ji whose light of tej was lighting the three worlds.

पादाक्रान्त्या नतभुवं, किरीटोल्लिखिताम्बराम्
क्षोभिताशेषपातालां, धनुर्ज्यानिःस्वनेन ताम्

the earth was pressed by the load of her feet. her mukut was looking like lines in the sky. the sound of her bow was frightening seven patals.

दिशो भुजसहस्रेण, समन्ताद् व्याप्य संस्थिताम्
ततः प्रववृते युद्धं, तया देव्या सुरद्विषाम्

devi stood and covered the entire space with her 1000 arms, after that war with asuras started.

शस्त्रास्त्रैर्बहुधा मुक्तैर्-आदीपित-दिगन्तरम्
महिषासुरसेनानी-श्चिक्षुराख्यो महासुरः ४०

sky was shining with different types of arms and weapons. powerful chichur was the commander of the army of asura.

युयुधे चामरश्चान्यैश्-चतुरङ्गबलान्वितः
रथानामयुतैः षड्भिर्-उदग्राख्यो महासुरः

he started to fight with devi. chamar also joined the war with the four divisions of his army. the great asur udagra came with 60 thosand chariots.

अयुध्यता-युतानां च, सहस्रेण महाहनुः
पञ्चा-शद्भिश्च नियुतैर्-असिलोमा महासुरः

asur mahahanu started the war with one crore chariots. asilomaa whose hair was like swords came with 5 crore chariots to fight.

अयुतानां शतैः षड्भिर्-बाष्कलो युयुधे रणे
गजवाजि-सहस्रौघैरऽनेकैः परिवारितः

baashkal joined with 60 lakh chariots. parivaarit came with elephants, horses and one crore chariots.

वृतो रथानां कोट्या च, युद्धे तस्मिन्-नयुध्यत
बिडालाख्योऽयुतानां च, पञ्चाशद्भि-रथायुतैः

vidaal came with 5 arab chariots. many other thousands of asurs started to fight with devi with chariots, elephants, and horses

युयुधे संयुगे तत्र, रथानां परिवारितः
अन्ये च तत्रायुतशो, रथ-नागहयैर्वृताः ४५
युयुधुः संयुगे देव्या, सह तत्र महासुराः
कोटिकोटि-सहस्रैस्तु, रथानां दन्तिनां तथा
हयानां च वृतो युद्धे, तत्राभून् महिषासुरः
तोमरैर्भिन्दिपालैच्च, शक्तिभिर्मुसलैस्तथा
युयुधुः संयुगे देव्या, खड्गैः परशुपट्टिशैः
केचिच्च चिक्षिपुः शक्तीः, केचित्पाशांस्तथापरे

mahishasur himself was there with big army. asuras were fighting with different kinds of weapons. some threw shakti and rope.

देवीं खड्गप्रहारैस्तु, ते तां हन्तुं प्रचक्रमुः
सापि देवी ततस्तानि, शस्त्राण्यऽस्त्राणि चण्डिका
लीलयैव प्रचिच्छेद, निजशस्त्रास्त्र-वर्षिणी
अनायस्ताऽऽनना देवी, स्तूयमाना सुरर्षिभिः ५०
मुमोचासुरदेहेषु, शस्त्राण्यऽस्त्राणि चेश्वरी
सोऽपि क्रुद्धो धुतसटो, देव्या वाहनकेसरी
चचारासुरसैन्येषु, वनेष्विव हुताशनः
निःश्वासान् मुमुचे यांश्च, युध्यमाना रणेऽम्बिका
त एव सद्यः सम्भूता, गणाः शतसहस्रशः
युयुधुस्ते परशुभिर्-भिन्दिपालासि-पट्टिशैः

others tried to kill devi with sword. devi, filled with anger, destroyed all the weapons of asura's by showering her arms and ammunition like a play. she was not tired, devas were praising her and devi was showering weapons on asurs.

devi's lion was also shaking his shoulder and agrily walking in the army of asur like a jungle fire. every breath of devi produced army of devi's helpers (Gana) and joined devi in the war with different weapons.

नाशयन्तोऽसुरगणान्, देवीशक्त्युप-बृन्हिताः
अवादयन्त पटहान् , गणाः शङ्खांस्तथापरे

ganas started to destroy the asurs and made noise with conch and other instruments.

मृदङ्गाश्च तथैवान्ये, तस्मिन् युद्धमहोत्सवे
ततो देवी त्रिशूलेन, गदया शक्तिवृष्टिभिः ५५
खड्गादिभिश्च शतशो, निजघान महासुरान्
पातयामास चैवान्यान् , घण्टास्वन-विमोहितान्

in the festival of war many ganas were playing mridangam. devi killed hundreds of big asurs with her

